''आभरणालङ्कृता बालाः जनसम्मर्दे अदृश्यां भवेयुरिति, अथवा चोरैरपहृता भवेयुरिति च भीत्या बालयुवत्यो बालकानां हस्तानि स्वीयहस्तैः सह संयोज्य सह नयन्त्यः स्वलङ्कृतवत्यस्ताः प्रसूनधूपादिवस्तूनि हस्ते गृह्णन्त्यो बुद्ध भगवतो दर्शनार्थं बुद्धदेवालयं गत्वा भगवन्तं बुद्धमस्तुवन्निति । अत्र अन्तिम पङ्क्तौ ''पुरङ्काक्कुं पल्लि'' इति शब्दो बुद्धदेवालयवाचकः । पळ्ळिशब्दो द्रविड ग्रन्थेषु देवालयवाचकः ।

सङ्घकाले बुद्धमतस्यापि प्रचारः किञ्चिदिवासीत् । मतान्तरानु-यायिन इव बौद्धमतानुयायिनोऽपि स्वाचारानुष्ठानशीलाः, स्वमत-रक्षणैकदीक्षा बभूवुरिति पूर्वोक्तगाथया ऊहितुं शक्यते ।

## 6. सङ्घग्रन्थेषु साङ्ख्यमतनिरूपणम्

''पञ्चविंशतितत्त्वानि साङ्ख्यैरङ्गीकृतानि । पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च भूतानि, पञ्च तन्मात्राणि, मूलप्रकृतिः, पुरुषः, मनः, बुद्धिः, अहङ्कारः इतीमानि पञ्चविंशति तत्वानि । पुरुषस्तावत् अकर्त्ता, अक्रियश्च । मूलप्रकृतिरेव कत्री, सैव प्रपञ्चात्मना परिणमति ।

अयमेव साङ्ख्यमत सिद्धान्तसारः परिपाडल् ग्रन्थे तृतीय गाथायाम् -७७-८०.

பாழெனக் காலெனப் பாகென ஒன்றென
இரண்டென மூன்றென நான்கென
ஐந்தென ஆறென ஏழென எட்டெனத் தொண்டென
நால்வகை ஊழியெண் நவிற்றுஞ் சிறப்பினை

पङ्क्तिभिः साङ्ख्यमतसिद्धपञ्चविंशति तत्वानि विशेषतो निर्दिश्य एभिः पञ्चविंशति तत्वैरपि प्रतियुगं भगवान् ज्ञातुं शक्य इति महाविष्णोः स्तुतिव्याजेन साङ्ख्यमत निरूपणं तावदत्र क्रियते ।

एषु पूर्वोक्त पङ्क्तिषु केनकेन द्रविडपदेन किं किं तत्त्वमभिधीयत इति क्रमेण विव्रियते ।

பாழ் (पाऴ्) शब्दः पुरुषवाचकः । पुरुषस्तु नान्यं सृजति, नापि सृष्ट्यन्तरहेतुः, तस्मात् பாழ் शब्देन, पुरुषोऽभिधीयते ।

கால் (काल्) इत्यस्य बीजमित्यर्थः । पञ्चभूतानामपि जन्यत्वात्, जनकत्वाच्च (கால்) काल् शब्देन पञ्च भूतानि निर्दिश्यन्ते। பாகு (पाकु) शब्दः पञ्च कर्मेन्द्रियवाचकः। पाकु इत्युक्तौ व्यवस्थेत्यर्थः । एकैकस्यापि कर्मेन्द्रियस्यायमेव व्यापार इति व्यवस्थाकरणात् पाकु शब्देन पञ्च कर्मेन्द्रियाण्यभिधीयन्ते ।

पञ्चभूतेषु आकाशात् वायुः, वायोरग्निः, इति सृष्टिक्रममनुसृत्य आकाश- वायु- अग्निः- अप् - पृथिवीत्येतेषां सङ्ख्याक्रमोऽत्र विवक्षितः । ஒன்று (ओन्रु) शब्देन प्रथमभूतस्य आकाशस्य विशेष गुणः शब्दो निर्दिश्यते । इरण्डु (இரண்டு) शब्देन द्वितीयभूतस्य वायोः स्पर्शाख्यो विशेषगुणः इरण्डु शब्देन निर्दिश्यते । तृतीयभूतस्य अग्नेः विशेषगुणः उष्णोऽत्र मून्रु (மூன்று) शब्देनोच्यते । चतुर्थभूतस्य जलस्य विशेषगुणो रसः (நான்கு) नान्कु इति शब्द वाच्यः । प्रकृते पञ्चमभूतस्य पृथिव्याः विशेषगुणो गन्धः (ஐந்து)

ऐन्दु शब्दाभिधेयः । पञ्चज्ञानेन्द्रियाणि अन्तरिन्द्रियं भूतं मनः आहत्य षण्णामपि इन्द्रियाणामत्र (ஆறு) आरु इति शब्देन निरूपणं कृतम् । (ஏழு) एऴु शब्दः अहङ्कारं, (எட்டு) एट्टु शब्दः बुद्धिं, (ஒன்பது) ओन्पदु शब्दो मूलप्रकृतिश्च बोधयति । आहत्य पूर्वोक्त गाथायां एवं प्रकारेण पञ्च विंशति तत्वानामपि विशिष्य निर्देशप्रकारो ज्ञातव्यः ।

जैन बौद्ध साङ्ख्यादिमतानि अतिप्राचीनानि । वैदिकमतेषु विशिष्य तेषां मतानां निरसनात् वैदिकमतादपि अतिप्राचीनानि इमानि । न केवलं वैदिकमतात्, न्यायवैशेषिकमतादपि प्राचीनत-मत्वं तेषां मतानां सुस्पष्टं द्योत्यते । सङ्घकालीनग्रन्थेषु जैनबौद्धादिमत निरूपणेन इदं तावत् स्पष्टमवगम्यते, यत् वैदिकावैदिकमतानुयायिनः स्वस्वमतेषु बद्धादरा अन्योन्यं भ्रातृभावेन तदानीमवसन् तत्कालीना राजानः सर्वेषामपि मतानां मतानुयायिनाञ्चावकाशं दत्वा पोषितवन्तः । मतचर्चा वा, मतमात्सर्यः तत्काले नैव प्रादुरासीत् । मतान्तर निरसन प्रक्रिया च तदानीं नैव विशेषतः लब्ध स्थानाऽभूत् । किं बहूना, सङ्घकालः सर्वमतसामरस्यकाल इत्येव वक्तुं बुद्धिरुदेति ।

*****

# V

# द्रविडसङ्घसाहित्यग्रन्थेषु पुराणेतिहास कथा प्राचुर्यम्

इतिहासपुराणानां कालोऽतीव प्राचीनतमः । बहुसहस्रवर्षेभ्यः प्रागेव इमे ग्रन्थाः महर्षिभिः रचिताः । तदारम्भ पठन, पाठन, प्रवचन ग्रन्थलेखनादि बहु प्रकारैः क्रमेण प्रचारं प्रापिताः जनैरत्यन्तमादृताः । तेषां दैनन्दिनजीवितस्यात्यन्तमादर्शभूताश्चासन्नित्येतत् सर्वैरप्यास्तिकैरेकग्रीवतया अभ्युपगम्यते । सङ्घकालेऽपि इतिहास पुराण गाथासु जनाः अतीव बद्धश्रद्धाः तत्प्रचारे बद्धकङ्कणाश्चासन् । तत्कालीन राजानः इमा गाथा लक्ष्यीकृत्यैव स्वराज्यपरिपालनाधिकं अकुर्वन् । एतत्कथाप्रचारमेवात्मनः कर्तव्यत्वेन मत्वा तत्र अतिश्रद्धालवश्चासन् ।

सङ्घकालीनकवयः सर्वेऽपि, तदानीं द्रविडदेशे जनैरत्यन्तमादृताः प्रचारपथि स्थिता पुराणेतिहासगाथाः स्वीयग्रन्थेषु उपमान विधया तथा प्रकारान्तरेण तत्र तत्र प्रतिपाद्य, पुराणेतिहास ग्रन्थेषु विद्यमानां स्वकीयामन्यादृशीं भक्तिश्रद्धां प्रकटयामासुः । किं बहुना, पुराणेतिहासार्थप्रतिपादनैदम्पर्येणैव सङ्घकालीनकवयः स्वीय ग्रन्थान् रचयामासुरित्यपि तदीय ग्रन्थपर्यालोचनेन वक्तुं पार्यते । एतत्कथमिति सहेतुकं, सप्रमाणं सोदाहरणं अधस्तात् वर्णयिष्यते ।

क्वचिदुपमानविधया, क्वचित्प्रकृतकथानुबन्धित्वेन, क्वचित्स्वातन्त्र्येण चेति नानाप्रकारैः सङ्घकालीन कवयः पुराणेतिहासः गाथाः स्वीयं ग्रन्थेषु उदाहरन्ति ।

# 1.सङ्ककालीनकाव्येषु इतिहासपुराण गाथा वैविध्यम् ।

मूलोक्तप्रकारेणैव क्वचित् पुराणे इतिहास गाथाः सङ्ककालीन कवयः स्वीय काव्येषु वर्णयन्ति । अपरत्र पुराणान्तरानुगुण्येन तासु गाथासु परिवर्तनं कुर्वन्ति, अन्यत्र मूलगाथां देशकालानुगुण्येन जनानां रासिक्यानुगुण्येन च विपरिणमयन्ति । इमान् पूर्वोक्तान् विषयान् अधस्तात् सहेतुकं निरूपयिष्यामः ।

## सङ्ककाव्येषु रामकथा निरूपणम्

सीतान्वेषणार्थं समुद्रतीरमागतो रामो वट वृक्षस्याधस्तात् वेदविचारं कुर्वन्नास्ते । तदानीं पक्षिणः शब्दायन्ते । स्वकीय वेदविचारोपरोधभूतं पक्षिणां विरावं निवारयितुकामस्तान् पक्षिणो रामोऽपसारयति । तदनन्तरं विचारः प्रवर्तत इति रामकथामेनां उपमान विधया निर्दिश्य .....................एवं निश्शब्दः .....आसीदिति प्रकृतार्थं

अहनानूरु ग्रन्थे,

வென்வேற் கவுரியர் தொன்முது கோடி
முழங்கிரும் பெளவம் இரங்கும் முன்துறை
வெல்போர் இராமன் அருமறைக்கவித்த
பல்வீழ் ஆலம் போல (அக.பா.70, 13-16 வரி)

पङ्क्तिषु सङ्गकविः कश्चिद्वदति । कथेयं वाल्मीकिरामायणे न दृश्यते । परन्तु सङ्गकाले कथेयं जनैर्विशेषत आदृता, व्यवहृताचाभूत् इत्यनेनावगन्तुं पार्यते । तदानीन्तनजनैः व्यवहृता ग्रन्थानारूढाः श्रवणमूलमागता एवं विधाः अपूर्वा रामकथा अपि स्वयमन्विष्य स्वीय ग्रन्थेषु कविरयं निरूपयतीत्येतत् सङ्ग कवेरस्य पुराण कथासु विद्यमानामन्यादृशी भक्तिश्रद्धां तदन्वेषण व्यग्रताञ्च विशदीकरोति ।

तुष्टः कश्चित् चोलराजा विविधान्याभरणानि कवेः पारितोषि-कत्वेन प्रयच्छति । लब्धाभरणः कविः बान्धवेभ्यो यच्छति । तानि अङ्गुल्याभरणं कर्णयोः मध्याभरणं कण्ठयोः, करर्णाभरणानि मध्ययोः कण्ठाभरणं अङ्गुल्यां, अङ्गुल्याभरणं कर्णयोः इत्येवं व्यत्ययेन धारयन्ति । एवं धारणं, रावणेनापहृतया सीतया आकाशात् भूमौ विसृष्टान्याभरणानि गृहीत्वा कण्ठाभरणं पादयो; पादाभरणं कण्ठयोश्चेति व्यत्ययेन कपि भिःर्धारणसमानमस्ति इति अत्राप्युपमान विधया रामकथामेनां कविः कश्चित् पुरनानूरुग्रन्थे ३७८ गाथा (வரி 18-21)

கடுந்தெறலி ராமனுடன் புணர் சீதையை
வலித்தகையரக்கன் வெளவிய ஞான்றை
நிலஞ்சேர் மதரணி கண்ட குரங்கின்
செம்முகப் பெருங்கிளை யிழைப்பொலிந்தா அங்கு

पङ्क्तिषु प्रतिपादयति । गवणेनापहृतया सीतया आकाशात् विसृष्टं पर्वतोपरि पतितं, आत्मना गृहीत्वा सुरक्षितं, आभरणजालं

सीता विरह खिन्नाय रामाय दत्वा रावणकृत सीतापहरणश्च रामाय सुग्रीवो न्यवेदयत् इति कथांशो वाल्मीकिरामायणे किष्किन्धाकाण्डे षष्ठसर्गे (१२-१५) श्लोकेष्वेवं दृश्यते-

''तान्यस्माभिर्गृहीतानि निहितानि च राघव ।
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हति ।।

तमब्रवीत् ततो रामः सुग्रीवं प्रियवादिनम् ।
आनयस्व सखे शीघ्रं किमर्थं प्रविलम्बसे ।।

एवमुक्तस्तु सुग्रीवः शैलस्य: गहनां गुहाम् ।
प्रविवेश ततः शीघ्रं राघवप्रिय काम्यया ।।

उत्तरीयं गृहीत्वा तु स तान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ।।''

रावणकृत सीतापहरण विषयः परं मूले यथावद्वर्तते ।

कपिभिराभरण ग्रहणं वा तत्कृत धारण प्रकारो वा मूले नैव निरूपितः ।। परन्तु चमत्कारार्थं कविना मूल कथायां कश्चन विपरिणामः कृत इति ऊहितुं शक्यते । तत्काले सङ्घकविभिः विशेषतः रामकथाया उपमानत्वेन निर्देशात् तदानीं रामकथाप्रचारो जनेषु विशेषत आसीदित्येवं अत्र पार्यते । स्वकीय कल्पनमपि रामकथा विषयकमेव कुर्वन्तः कवय आत्मानं धन्य धन्यममन्यत इत्यपि वक्तुं बुद्धिरुदेति ।

## (उपमा)

पार्वतीपरमेश्वरौ श्रृङ्गाररसोद्युक्तौ कैलासे तिष्ठतः। ताभ्यामधिष्ठितं कैलासमुद्धर्तुकामो रावणः स्वहस्तान् पर्वतस्याधस्तान्निक्षिपति । परमशिवस्य पादाभ्यां पीडितं शैलमुद्धर्तुमशक्तो रावणः पर्वताग्रे लग्नकरो विरावमकरोदिति रामकथामुक्त्वा एवम्भूत रावण इव अयमस्तीति प्रकृतकथामुपसंहरति कविः कलित्तोकै ग्रन्थे

(३८ गाथा, வரி 1-5)

இமையவில் வாங்கிய ஈர்ஞ்சடையந்தணன்
உமையமர்ந்துயர்மலை இருந்தனனாக
ஐயிரு தலையின் அரக்கர் கோமான்
தொடிப்பொலி தடக்கையிற் கீழ் புகுத்தம்மலை
எடுக்கல் செல்லா துழப்பவன் போல.

पङ्क्तिषु ।

उत्तररामायणे १६ सर्गे श्लोकेषु

तत पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् ।
नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ।। (९)

निर्वतस्व दशग्रीव शैले क्रीडति शंकरः ।
सुपर्णनाग यक्षाणां देवगन्धर्व रक्षसाम् ।। (१०)

तमिमं शैलमुन्मूलं करोमि तव गोपते ।। (२३)

एव मुक्त्वा ततो राम भुजान् विक्षिप्य पर्वते ।
तोलयामास तं शीघ्रं स शैलः समकम्पत ।। (२५)

चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् (२६)

ततो राम महादेवो देवानां प्रवरो हरः ।
पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ।। (२७)

पीडितास्तु ततस्तस्य शैलस्तम्भोपमा भुजाः ।। (२८)

रक्षसा तेन रोषाच्च भुजानां पीडनात् तथा ।। (२९)

निरूपितां कथामेनां द्रविडकविरत्र तथैव विना विपरिणामं निरूपयति । अत्र कविः स्वकल्पना प्रभावं नैव प्रादर्शयत्, नापि कथायां विपरिणामं कर्तुमैच्छत् ।

तिरुप्परङ्कुन्ट्र क्षेत्रे देवालयमण्डपोपरि नाना पुराणेति हास गाथाः चित्ररूपेण लिखिता वर्तन्ते । तत्र लिखितेषु चित्रेण अहल्याशापवृत्तान्तोऽपि अन्यतमः । तद्दर्शनार्थमागतयोर्दम्पत्योः भार्या अहल्याशाप वृत्तान्त चित्रं हस्तेन निरूप्य भर्तारं किमिति पृच्छति । अत्र गौतम शप्त इन्द्रः बिडालरूपेण वर्तते । अहल्याभर्ता गौतमः इतः समीपे तिष्ठति; गौतम शापात् शिलारूपतां प्राप्ता अहल्या अत्रैव वर्तत इति भर्तृ समाधान मुखेन रामयणोक्त अहल्या शाप वृत्तान्तं चित्र रूपेण स्थितं द्रविडकविः कश्चित् परिपाडल् ग्रन्थे १९ गाथा (வரி 50-52)

இந்திரன் பூசை இவளகலிகையிவன்
சென்ற கவுதமன் சினனுறக்கல்லுரு
ஒன்றிய படியிதென்றுரை செய்வோரும்

पङ्क्तिषु ब्रूते ।

वाल्मीकिरामायणे बालकाण्डे ४८ सर्गे-

''तथा शप्त्वा च वै शक्रं भार्यामपि च शप्तवान् ।
इह वर्षसहस्राणि बहूनि निवसिष्यसि ।।

वात भक्षा निराहारा तप्यन्ती भस्मशायिनी ।
अदृश्या सर्वभूतानां आश्रमेऽस्मिन् वसिष्यसि ।।

यदा त्वेतद् वनं घोरं रामो दशरथात्मनः ।
आगामिष्यति दुर्धर्षः तदा पूता भविष्यसि ।।

(वा-रा.बा.४८स, २९-३१)

श्लोकात् गौतमः स्वभार्यां ''अदृश्या भव'' इत्येव शप्तवानिति मूलग्रन्थादवगम्यते । द्रविडकविस्तु अहल्यां शिलात्वेन *शशापेति किञ्चिन्मलूकथायां विपरिवर्तनं करोति ।

''शापदग्धा पुरा राम भूत्वा शक्रापराधतः ।
अहल्याख्या शिला ज्ञज्ञे''-इति पद्मपुराणे ।
''चारुगौतमवधूः शिलामयी'' इति
कालिदासीय रघुवंशे च (११स-३४) निरूपितम् ।

*अहल्याख्या शिला ज्ञज्ञे-इति पाद्म पुराणवचनमनुसृत्य अत्र कविः उदाहरति।

अहल्यायाः शिलात्वरूपं शापप्रकारं मनसि कृत्वा द्रविडक-विनायं उल्लेखः कृत इत्यत्र न सन्देहः ।

श्रीमद्वेदान्त देशिका अपि–“शिलादेः स्त्रीत्वादि”* इति पद्म पुराण प्रक्रियामेव अहल्याशापविषये अनुसृतवन्त इति स्पष्टमेतत् ॥

रामकथाः कुत्र कुत्र कथं कथं प्रतिपादिता इति विमर्शनेऽपि द्रविड कवयः तत्काले व्यग्रा आसन्निति स्पष्टमनेनावगतः स्थाली पुलाकन्यायेन सङ्घग्रन्थेषु प्रतिपादिताः रामकथाः काश्चन परं उद्धृत्य प्रतिपादिताः । एवं तत्र तत्र बह्व्यः सन्ति । विस्तरभयात् विरम्यते ।

## 2. सङ्घग्रन्थेषु कृष्णकथा निरूपणम्

श्रीमद्भागवते दशमस्कन्धे द्वाविंशाध्याये गोपिकावस्त्रापहरण प्रकरणे कृष्णेनापहृतानि स्वीय वस्त्राणि तं प्रणम्य गोपिकाः वृक्षोपविष्टात् कृष्णात् प्राप्तवन्त इति कथा दृश्यते ।

विवस्त्रासु गोपिकासु यमुनातीरे स्थितासु ता दृष्ट्वा कुन्दवृक्षोपरि स्थितः कृष्णः वृक्षपर्णैः तासां शरीराच्छादनार्थं कृतमतिः वृक्षशाखा यथा तासां हस्तगता भवेत्, ततः पर्णानि गृहीत्वा ताः धृतवस्त्राश्च यथा भवेयु;, तथा कर्तुं वृक्ष शाखां भूलग्नामकरोदिति द्रविडकविः कथामेनां मूलतो भिन्नां अहनानूरु ग्रन्थे गाथा ५९–

---

* (श्री.रह.सारे.प्रभावरक्षाधिकारे आदौ)

வருந்தினை வாழியர் நீயே வடா அது
வண்புனல்தொழுநை வார்மணல் அகன்துறை
அண்டர் மகளிர் தண்தழை உடீஇயர்
மரஞ்செலமிதித்த மா அல்போல

(வரி 3-6)

पङ्क्तिषु प्रतिपादयति । वस्तुतस्तु जनरञ्जनार्थं अयं कथा भेदः कविना कृतः स्यात् इत्येव भाति । कथेयं उपमान विधयैवात्र वर्णिता ।

अश्वरूपधारिणं कंसप्रेषितं स्वजिघांसयागतं केशिनामकं दानवं लीलया कृष्णो जघान । राक्षसहननमूलं लब्धा विपुला कीर्तिरिव तदीयो हस्ते दीर्घतरोस्तीति परिपाडल् नामक द्रविड ग्रन्थे ३ गाथा-

கூந்தல் என்னும் பெயரொடு கூந்தல்
எரிசினங் கொன்றோய் நின் புகழுருவின கை (வரி 31-32)

पङ्क्तिषु इत्थं कथा प्रतिपादिता दृश्यते ।

श्रीमद्भागवते दशमस्कन्धे ३७ अध्याये प्रतिपादिता कृष्ण कथां तथैवात्र द्रविडकविः अनूद्य वदति । मूलकथायां द्रविडकविनात्र न कोऽपि विपरिणामः कृतः ।

कंस प्रेषितान् मुष्टिचारणादि युद्धवीरान् स्वजिघांसयागतान् भगवान् कृष्णो युद्धे अहन् इति कलित्तोकै नामकद्रविड ग्रन्थे ५२ गाथा-

மல்லரை மறஞ்சாய்த்த மால்போற்றன் கிளை நாப்பண்

(வரி-5)

पङ्क्तौ प्रोक्तेयं कथा श्रीमद्भागवते दशमस्कन्धे ४४ अध्याये अन्यूनानतिरेकेण तथैव प्रतिपादिता दृश्यते । द्रविडकविः कथामिमां स्वीय ग्रन्थे स्वविवक्षित प्रकृतार्थोदाहरणतयैव स्वीकृतवान् ।

देवासुर युद्धे असुराः सूर्यं अपहृत्य नीतवन्तः । तेन कृत्स्नं जगदन्धकारावृतमभवत् । तेन खिन्नाः सर्वेऽपि देवाः श्रीकृष्णं शरणं जग्मुः । शरणागतवत्सलः सः, असुरैरपहृतं दिवाकरं पुनरानीय आकाशे प्रतिष्ठापयामासेति कृष्णसंबन्धिनी नूत्नेयं कथा द्रविडकविना पुरनानूरु- १७४ गाथा (வரி 1-5)

அணங்குடையவுணர் கணங்கொண்டொளித்தெனச்
சேண் விளங்கு சிறப்பின் ஞாயிறு காணா
திருள் கண் கெடுத்த பருதி ஞாலத்-
திடும்பைகொள் பருவரல் தீரக் கடுந்திறல்
அஞ்சன வுருவன்றந்து நிறுத்தாங்கு

पङ्क्तिषु प्रत्यपादि ।

वस्तुतस्तु श्रीभागवते, तथा भारते वा कृष्ण चरित्रप्रतिपादके कस्मिन्नपि ग्रन्थे कथेयं नोपलभ्यते । तस्मात् कृष्ण भक्तोऽयं द्रविडकविः कथामेनां स्वयमनुमाय गाथामेनां व्यरचयदिति केषाञ्चिद्वादः ।

अमृतमथनानन्तरं मोहिनी रूपधारिणा विष्णुना देवानां अमृतप्रदानसमये राहुरपि तद्गोष्ठी प्रविष्टो वञ्चनया अमृतं जग्राह ।

तत्रस्थो रविः दृश्यमेतत् दृष्ट्वा देवेभ्यो न्यवेदयत् । तेन कुपितो राहुः रविमपीडयत् । तेन भीतो रविः अस्थाने अस्तं प्राप । प्रभारहितं जगत् शून्यमभवत् । तदा देवैः प्रार्थितो ब्रह्मा अरुणं सृष्ट्वा तं रवि सारथिं कृत्वा तद्वारा अस्तं गतं रविं पुनरानीतवानिति कथेयं भारते आदिपर्वणि १८ अध्याये (४-१७) (ग्रन्थलिपि कोशे)

''चन्द्रार्काभ्यां यदा राहुराख्यातोऽ्यमृतं पिबन् ।
वैरानुबन्धं कृतवांश्चन्द्रादित्यौ तदाऽनध ।।

बाध्यमानं ग्रहेणाथ ह्यादित्ये मन्युराविशत् ।
सुरार्थाय समुत्पन्नो रोषो रोहोस्तु मां प्रति ।।

बह्वनर्थकरं पापमेकोऽहं समवाप्नुयाम् ।।
सहाय एव कार्येषु नच कृच्छ्रेषु दृश्यते ।

पश्यन्ति ग्रस्यमानं मां सहन्ते वै दिवौकसः ।।

तस्माल्लोकविनाशार्थं व्यवतिष्ठे न संशयः ।
एवं कृतमतिः सूर्यो ह्यस्तमभ्यगमद्गिरिम् ।।

तस्माल्लोक विनाशाय संतापयत भास्करः ।
ततो देवानुपागम्य प्रोचुरेवं महर्षयः ।।

अद्यार्धरात्र समये सर्वलोकभयावहः ।
उत्पत्स्यते महान्दाहस्त्रैलोक्यस्य विनाशनम् ।।

ततो देवाः सर्षिगणा उपगम्य पितामहम् ।
अब्रुवन्किमिवेहाद्य महद्दाहकृतं भयम् ।।

न तावद्दृश्यते सूर्यः क्षयोऽयं प्रतिभाति च ।
उदिते भगवन्भानौ कथमेतद्भविष्यति ।।

पितामह उवाच-

एष लोकविनाशाय रविरुद्यन्तुमुद्यतः ।
दृश्यन्नेव हि लोकान्स भस्मराशीकरिप्याति ।

तस्य प्रतिविधानं च विदितं पूर्वमेव हि ।
कश्यपस्य सुतो धीमानरुणेत्यभि विश्रुतः ।।

महाकायो महातेजाः स स्थास्यति पुरो रवेः ।
करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति ।।

लोकानं स्वस्ति चैवं स्यादृषीणां च दिवौकसाम् ।।

सौतिरुवाच

ततः पितामहाज्ञातः सर्वं चक्रे तदाऽरुणः ।

(भा.आ.प-१८ अ, ४-१७)

श्लोकेषु निरूपिता वर्तते ।

कथामेनां मनसि कृत्वा तत्र किञ्चित् विपर्यासं कृत्वा द्रविडकविना कथेयं कल्पिता भवितुमर्हतीति वक्तुमस्त्यवकाशः ।

द्रविडकविः स्वप्रतिपादित प्रकृतार्थविशदीकरणाय इमामपि कथां उपमान बिधयैव स्वीयग्रन्थेप्रतिपादयति ।

# 3. सङ्ककालीनग्रन्थेषु नाना भगवदवतारकथा प्रतिपादनम्

कदाचिज्जलधौ निमग्नां कृत्स्नां भुवं वराहो भूत्वा, अब्धिं प्रविश्य दंष्ट्राभिः बहिरानीय पुनस्तत्रत्वं प्राणिनां वासस्थानमकल्पथ। एवं-भूतमहिमोपेतो भवानिति भगवन्तं महाविष्णुं सम्बोध्य द्रविडकविं कश्चित् परिपाडल् २ गाथा-

கேழல் திகழ்வரக் கோலமொடு பெயரிய
ஊழி ஒரு வினை உணர்த்தலின் முதுமைக்கு
(பரிபாடல்-2, வரி 16-17)

गाथा-३

ஊழியாழிக் கணிருநில முருகெழு
கேழலாய் மருப்பினுழுதோ யெனவும்
(ப.பா.3, வரி 23-25)

पङ्क्तिषु च भगवन्तं स्तौति ।

भागवते तृतीयस्कन्धे १३ अध्याये

खुरैः क्षुरप्रैर्दरयंस्तदाप उत्पारपारं त्रिपरू रसायाम् ।
ददर्श गां तत्र सुषुप्सुरग्रे यां जीवधानीं स्वयमभ्यधत्त ।। (३०)

स्वदंष्ट्रयोद्धृत्य महीं निमग्नां स उत्थितः संरुरुचे रसायाः ।
तत्रापि दैत्यं गयया॒ऽऽपतन्तं सुनाभसन्दीपिततीव्रमन्युः ।। (३१)

तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ।
प्रज्ञाय बद्धाञ्जलयोऽनुवाकै र्विरिञ्चिमुख्या उपतस्थुरीशम् ।। (३३)

(भा.तृ, १३ अ श्लो ३०, ३१, ३३)

श्लोकेषु प्रतिपादितां वराहावतारकथा द्रविडकविरत्र तथैव वदति ।

स्वपित्रा बहुभिः प्रकारैः स्व नामोच्चारणार्थं प्रार्थितोऽपि प्रह्लादः तन्नामोच्चारणविमुखो भूत्वा भगवद्भक्तिपरः सदा तन्नामोच्चारणमेवाकरोत्। भक्तप्रियो भगवान् नृसिंहरूपधारी स्तम्भात् बहिरागत्य तत्पितरं हिरण्यकशिपुं अनाशयत् इति भागवते सप्तमस्कन्धे ५-७ अध्याये प्रतिपादितां नृसिंहावतारकथां द्रविडकविः

परिपाडल् ४ गाथा-

பிருங்கலாதன் பலபல பிணிபட
வலந்துழி, மலர்ந்தநோய் கூர் கூம்பிய நடுக்கத்--
தலர்ந்த புகழோன் தாதையாகலின்
இகழ்வோன், இகழா நெஞ்சினனாக நீ யிகழா
நன்றா நட்ட அவன் நன் மார்பு முயங்கி
ஒன்றா நட்டவனுறுவரை மார்பிற்
படிமதஞ்சாம்ப வொதுங்கி
இன்னலின்னரொடிடி முரசியம்ப
வெடிபடா வொடிதூண் தடியொடு
தடிதடி பல படவகிர்வாய்த்த உகிரினை.

(பரி, 4பா, வரி 12-21)

पङ्क्तिषु तथैवानुवदति ।

क्षत्रियकुलविध्वंसनैकदीक्षः परशुरामः क्षत्रियकुलं कृत्स्नं व्यनाशयत् इति भारत रामायणादिषु प्रतिपादितं परशुरामावतारचरितं

अहनानूरु २२० गाथा-

கெடா அத்தீயின் உருகெழு செல்லூர்
கடா அயானைக் குழூ உச் சமந்ததைய
மன் மருங்கு அறுத்த மழுவாள் நெடியோன்
முன் முயன்றரிதினின் முடித்த வேள்வித்
கயிறரையாத்த காண்டகு வனப்பின்
அருங்கடி நெடுந்தூண் போல, யாவருங்
காணலாகா மாணெழிலாகம்

(அக.பா.220, வரி.3-9)

पङ्क्तिषु तथैव विशदयति ।

बलिसकाशात् पादत्रयपरिमितं भुवं याचित्वा तत-त्रिविक्रमो भूत्वा कृत्स्नां भुवं तत्सकाशात् लब्ध्वा भगवान् यथा ववृध इतीमां त्रिविक्रमावतारकथां उपमानत्वेन निर्दिश्य प्रकृतार्थमुपसंहरति द्रविडकविः-मुल्लैप्पाट्टु (१-३) पङ्क्तिषु

நனந்தலையுலகம் வளைஇ நேமியொடு வலம்புரி
பொறித்த மாதாங்கு தடக்கை நீர் செல
நிமிர்ந்த மாஅல் போலப்

परिपाडल् - ३ गाथा

திணி நிலங் கடந்தக்காற்றிரிந்தயர்ந்தகன்றோடி
நின்னஞ்சிக் கடற்பாய்ந்த பிணிநெகிழ் பவிழ் தண்டார்
அன்னவர் படவல்லா அவுணர்க்கு முதல்வனீ....

५४-५६ पंक्तिषु च ।

रामायणे बालकाण्डे २९ सर्गे (१९-२०) श्लोके प्रतिपादितां

अथ विष्णुर्महातेजा अदित्यां समजायत ।
वामनं रूपमास्थाय वैरोचनिमुपागमत् ।। (१९)

त्रीन् पदानथ भिक्षित्वा प्रतिगृह्य च मेदिनीम् ।
आक्रम्य लोकांललोकार्थी सर्वलोकहिते रतः ।। (२०)

मूलकथामेव द्रविडकविरत्र प्रमाणत्वेन

स्वीकृतवान् । नापि कथायां कमपि विपर्यासमकरोत् ।

## 4. सङ्घद्रविडग्रन्थेषु महाभारतोक्त कौरवपाण्डव युद्ध संबन्धिकथा निरूपणम् ।

दुर्योधनस्य ऊरुभञ्जनपूर्वकं तं भीमो जघान इति भीमकृत दुर्योधनहननकथां द्रविडकविः उपमानत्वेन कलित्तोकै ५२ गाथा-

மறந்தலைக் கொண்ட நூற்றுவர் தலைவனைக்
குறங்கறுத்திடுவான் போற் கூர் நுதிமடுத்ததன்
(க.52 பா, வரி 2-3)

पङ्क्तिषु वदति ।

दुर्योधनो वञ्चनया जतुगृहे पञ्चपाण्डवान् निक्षिप्य तद्गृहं ददाह । तदा दग्धाद्गृहात् भीमो युधिष्ठिरादीन् स्वभ्रातृन् ततो बहिरानीय रक्षितवानितीयं कथा द्रविडकविना कलित्तोकै २५ गाथा-

வயக்குறு மண் புலம் வடமொழிப்பெயர் பெற்ற
முகத்தவன் மக்களுள் முதியவன் புணர்ப்பினால்
ஐவரென்றுலகேத்தும் அரசர்கள் அகத்தராக்
கைபுனை யரக்கில்லைக் கதழெரி சூழ்ந்தாங்குக்
(கலி.பா.25, வரி 1-4)

तथा २५ गाथा-

ஒள்ளுரு அரக்கில்லை வளிமகன் உடைத்துத்தன்
உள்ளத்துக்கிளைகளோ டுயப்போகுவான்போல
(கலி பா.25, வரி-7-8)

पङ्क्तिषु च उपमानविधया प्रतिपाद्यते ।

द्रौपद्याः केशग्रहणोद्युक्तं दुःशासनं हत्वा भीम स्वप्रतिज्ञां पूरयामासेति दुःशासनहननपूर्वकभीमकृत प्रतिज्ञानिर्वर्तनरूपं चरित्रं कलित्तोकै १०१ गाथा-

அஞ்சீரசையியல் கூந்தற்கை நீட்டியான்
நெஞ்சம் பிளந்திட்டு நேரார் நடுவண் தன்
வஞ்சினம் வாய்த்தானும் போன்ம் (வரி.18-20)

पङ्क्तिषु द्रविड कविना उदाहरण रूपत्वेन व्यलेखि ।

कौरवपाण्डवकृतयुद्धसंबन्धिविषयः कलित्तोकै १०४ गाथा-

புரிபுமேற் சென்ற நூற்றுவர் மடங்க
வரிபுனை வல்விலைவரட்ட
பொருகளம் போலுந்தொழூஉ
(கலி பா.104 (வரி 57-59)

पङ्क्तिषु प्रतिपादितो दृश्यते ।

भारत युद्धे समरोद्युक्तानां कौरवपाण्डव सैन्यानां अन्नदानेन महत्साह्यमाचरितं त्वया इति ''शेरमान् पेरुञ्चोर्ट्रदियन् शेरलादन्'' नामक चोळराजानं संबोध्य द्रविडकविना पुरानानूरुग्रन्थे ।

२ गाथा (१३-१६)

அலங்குளைப் புரவி ஐவரொடு சினைஇ
நிலந்தலைக் கொண்ட பொலம்பூந் தும்பை
ஈரைம் பதின்மரும் பொருதுகளத் தொழியப்
பெருஞ்சோற்று மிகு பதம் வரையாது கொடுத்தோய்

पङ्क्तिषु इत्थं स्तुतिः कृता । वस्तुतस्तु बि.सि. प्रथम शताब्दवासिना चोळराज्ञां ततो बहुसहस्र वत्सरात्पूर्वं प्रवृत्ते युद्धे वीराणामन्नदानं कृतमित्येतत् नैव समञ्जसं भवितुमर्हति । द्रविडराज्ञ औन्नत्यकथनैदम्पर्येण कविना कृतोऽयमुल्लेखः केवलं चमत्कारैकपरो., न तावत्तात्विकः ।

पूर्वोक्तानि कौरव पाण्डवयुद्ध संबन्धीनि चरित्राणि प्रायशो महाभारतात् तथैव उद्धृत्य लिखितान्येव । अत्र विषये स्वकल्पना-चातुर्यं द्रविडकवयो नैव प्रादर्शयन् । नापि मूलकथासु विपरिणा-ममकुर्वन् । क्वचित् तत्वार्थप्रदर्शनमपि कवीनामावश्यकं भवति । मूलकथायां विपरिणामो वा उल्लेखो वा क्वचित् क्वचित् कविभिः क्रियमाणः काव्य शोभावहो भवति ।

## 5. सङ्घद्रविड ग्रन्थेषु महाभारतोक्त नानाकथा निरूपणम्

श्येनादात्मानं रक्षितुकामः कपोतः शिबिचक्रवर्तिनं शरणं ययौ । तदा स कारुणिको राजा तुलामधिरुह्य, आत्म समर्पणेन कपोतं श्येनात् ररक्ष । तथा विधस्य दानशौण्डस्य शिबिचक्रवर्तिनः कुले जातस्य तवायं दान गुणः कुलपरंपरागत इति चोळराजानं संबोध्य

द्रविडकविः कश्चित् भारतोक्त शिबिचक्रवर्तिकथा प्रतिपादनद्वारा चोळराजानं पुरनानूरु ३९ गाथा

(வரி 1-4)

புறவினல்லல் சொல்லிய கறையடி
யானை வால்மருப் பெறிந்த வெண்கடைக்
கோனிறை துலா அம்புக் கோன் மருக!
ஈதல் நின் புகழு மன்றே, சார்தல்

तथा ४३ गाथा (४-९)

கொடுஞ்சிறைக் கூர்கிர்ப்பருந்தினேறு குறித்தொரீஇத்
தன்னகம் புக்க குறுநடைப் புறவின்
தபுதியஞ்சிச் சீரை புக்க
வரையா ஈகையுரவோன் மருக!
நேரார்க்கடந்த முரண் மிகு திருவின்

पङ्क्तिषु च स्तौति ।

महाभारते वनपर्वणि ११५ अध्याये- ग्रन्थे कोशे)

''अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन सहाभिभो ।
घ्रियमाणः कपोतस्तु, मांसेनात्यतिरिच्यते
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ।।
न विद्यते यदा मांसं कपोतेन समं धृतम् ।
तत्रोत्कृत्त मांसोऽसावारुरोह स्वयं तुलाम् ।

श्येन उवाच-

इन्द्रोहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ।।

(भा.व.अ.१३५ श्लो (२७.३०))ग्रन्थकोशे

श्लोकेषु प्रतिपादितशिबि कथाया द्रविडकाव्योक्तशिबि-कथायाश्च न कोऽपि भेदो दृश्यते ।

चोलराजाः शिबिचक्रवर्तिपरंपरायामागता इत्यत्र चरित्रसंबन्धि प्रमाणं वा पुराणसंबन्धि प्रमाणंवा नैव वर्तते । केवलं तेषामौन्नत्यकथनार्थमयमपि द्रविडकविकृतोऽपरोल्लेख एवेति निर्धारणीयमस्ति ।

महाभारत चरित्र समकालिकत्वं तत्कालवर्तिराजपरंपरागतत्वं च द्रविड कविषु परिकल्प्य तद्द्वारा तेषां औन्नत्यं स्थापनीयमित्यत्र सङ्घकालीनकवयः श्रद्धाविशेषं प्रदर्शितवन्तः । अनेनेदं स्पष्टमवगम्यते यत् महाभारत ग्रन्थे सङ्घकालीनद्रविडकवयो भक्तिश्रद्धां विशेषतः प्रदर्शितवन्तः ।

देवैः समेतो ब्रह्मा त्रिपुरसंहारार्थं महादेवं अयाचतेति महाभारते कर्म पर्वणि २४ अध्याये (५४-५६)श्लोकेषु -(ग्रन्थ कोशे)

"ते देवास्तेन वाक्येन चोदिताः प्रणताःस्थिताः ।
दिव्यं वर्ष सहस्रं वै तपस्तप्त्वा सुरर्षभाः ।।

शुभात्मानो महात्मनोजग्मुर्वै वृषभध्वजम् ।
ब्रह्माणमग्रतः कृत्वा शरण्यं शरणागताः ।।''

अध्यायं २५-श्लो (१-२)

सत्कृत्य शंकरं तत्र ब्रह्मा लोकपितामहः ।
इमान्यसुर दुर्गाणि लोकादीनाक्रमन्ति हि ।।

श्लोकेषु उक्तं चरित्रं कलित्तोकै
१ गाथा-

தொடங்கற் கட்டோன்றிய முதியவன் முதலாக
அடங்காதார் மிடல் சாய, அமரர் வந்திரத்தலின்
மடங்கல் போற் சினைஇ, மாயஞ்செய் அவுணரை
கடந்தடு முன்பொடு முக்கண்ணான் மூவெயிலு
முடன்றக்கால் முகம்போல

(கலி.பா.2, வரி.1-5)

पङ्क्तिषु तथैवान्यूनानतिरेकं द्रविडकविः प्रतिपादयति ।

त्रिपुरसंहारसमये परमशिवस्य चतुर्मुखः सारथिरभवत् । वेदाः हया अभवन् । धरा रथरूपतां दधार इति महाभारते कर्णपर्वणि २७ अध्याये ८ श्लोके-

''तथैव वेदाश्च रथे हयाग्र्याः धरा सशैला च रथो महात्मनः ।
नक्षत्रवंशानुगतो वरूथी यस्मिन्योद्धा सारथिनाऽभिरक्ष्यः ।।

४२ श्लोके:

''एवं रुद्रस्य कृतवान्सारथ्यं तु पितामहः ।
संयच्छ तुरगानस्य राधेयस्य महात्मनः ।।

श्लोकयोः कथितं चरित्रं परिपाडल् ५ गाथा-(२२-२४)

ஆதியந்தணன் அறிந்து பரிகொளுவ
வேதமாபூண் வையத்தேர் ஊர்ந்து
நாக நாணு மலை வில்லாக

पङ्क्तिषु, द्रविडकविः तथैव विवृणोति ।

एकेनैव बाणेन महादेवः त्रिपुरमदहदिति महाभारते कर्णपर्वणि २७ अध्याये ३७ श्लोकः

एक बाणेन तं देवास्त्रिपुरं परमेश्वरः ।
निजघ्ने सासुरगणं देवदेवो महेश्वरः ।।

इति श्लोके प्रतिपादितं विषयमेव

पुरनानूरु ५५ गाथा (१-४) पङ्क्तिषु

ஓங்கு மலைப் பெருவிற் பாம்புஞாண் கொளீஇ
ஒரு கணை கொண்டு மூவெயிலுடற்றிப்
பெருவிறலமரர்க்கு வென்றி தந்த
கறைமிடற்றண்ணல்

मूलाविरोधेन तथैव ब्रूते द्रविडकविः ।

परमशिवश्शूतवृक्षात्मना चागतं शूरपद्मनामानं दानवं अहनत् इति परिपाडल् १४ गाथा-

சூர்மருங்கறுத்த சுடர்ப்படையோயே (18 வரி)

पङ्क्तौ प्रदर्शितं परमशिवकृत-

शूरपद्मवध चरित्रं बहुषु पुराणेषु प्रतिपादितमस्ति ।

*****

# VI

# सङ्घकालीनग्रन्थेषु शिवविष्णवादि देवतास्तुतिः

## १. षण्मुख

कृतोद्वहः परमशिवः पार्वतीमुपयेमे । तयोः यदि पुत्रो जायेत स सर्वातिशायी भविष्यति इति मन्यमान इन्द्रो रुद्रसमीपं गत्वा स्वीयामिच्छां प्राचीकटत् । तच्छ्रुतवान् परमशिवस्तथैवाङ्ग्यकार्षीत् । परमशिवस्य रेतः किञ्चिद्भूमावपतत् । पावकस्तत् हस्तेन जग्राह । सप्तर्षयः अवशिष्टं रेतोगृहीत्वा तेन अग्नौ हुत्वा ततोऽवशिष्टं अरुन्धतीं विना अन्याभ्यः सप्तर्षिपत्नीभ्योऽयच्छन् । तेन सञ्जातगर्भास्ताः शिशूनुत्पाद्य गङ्गातीरे शरवणस्थले तान् व्यमुञ्चन् । आकाशमार्गेण भर्त्रासह गच्छन्ती पर्वतराजपुत्री शिशून् दृष्ट्वा अधोऽवतीर्य तान् षट्कुमारानपि अङ्केन जग्राह । ते सर्वे मिलिताः षण्मुखात्मना अभवन् ।

மண்மிசை அவிழ்துழாய் மலர்தரு செல்வத்துப்
புண்மிசைக் கொடியோனும் புங்கவமூர்வோனும்
மலர்மிசை முதல்வனும் மற்றவனிடைத் தோன்றி
உலகிருள் அகற்றிய பதின்மருமிருவரும்
மருந்துறை இருவரும் திருந்து நூலெண்மரும்
ஆதிரை முதல்வனிற்கிளர்ந்த நாதர் பன்னொருவரும்
நன்றிசை காப்போரும் யாவரும் பிறரும்
அமரரும் அவுணரும் மேவரு முதுமொழி-
விழுத்தவ முதல்வரும் பற்றாகின்று நின் காரணமாக்.

पङ्क्तिषु तथैवानूद्य प्रतिपादितो दृश्यते । महाभारते कुमारदर्शन स्थल निर्देशो न कृतः । द्रविडग्रन्थेषु तिरुप्परङ्कुन्र्ट्रक्षेत्रे वसन्तं षण्मुखं द्रष्टुकामा इमे आगता इति कुमारदर्शनस्थल विशेषनिर्देशोऽत्र अकारीत्यत्र विषये द्रविडसंस्कृतग्रन्थयोर्मध्य इयानेव भेदो दृश्यते ।

## २.षण्मुखाय क्रीडनकवस्तुदानम्

षण्मुखदर्शनार्थमागतेषु देवेषु, अग्निः कुक्कुटं, इन्द्रो मयूरं, यमश्छागं, अन्ये देवा मृग, धनुः, परशु, मणि, माला, शूल, कृपाणादीनि च वस्तूनि क्रीडनकत्वेन षण्मुखायायच्छन्निति परिपाडल् ग्रन्थे ५ गाथायां–

அனலன் தன் மெய்யிற் பிரித்துச்
செல்வ வாரணங்கொடுத்தோன் வானத்து
வளங்கெழு செல்வன்தன் மெய்யிற்பிரித்துத்
திகழ் பொறிப்பீலி அணிமயில் கொடுத்தோன்
திருந்துகோன் ஞமன்றன் மெய்யிற் பிரிவித்
திருங்கண் வெள்யாட்டெழின்மறி கொடுத்தோன்
ஆ அங், கவரும் பிறரும் அமர்ந்து படையளித்த
மறியு மஞ்ஞையும் வாரணச் சேவலும்
பொறிவரிச் சாபமு மரனும் வாளும்
செறியிலை ஈட்டியும் குடாரியும் கணிச்சியும்
தெறுகதிர்க் கனலியு மாலையுமணியும்
வேறுவேறுருவினிவ் வாறிரு கைக்கொண்டு
மறுவில் துறக்கத் தமரர் செல்வன்றன்
பொறிவரிக் கொட்டையோடு புகழ்வரம் புகழ்ந்தாய்

(परि. ५गा, पङ्क्ति ५७-७०)

भारते अनुशासनपर्वणि १३३ सर्गे–

ततो देवाः प्रियाण्यस्य सर्व एव समाहरन् ।
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह ।।

सुपर्णोऽस्य ददौ पुत्रं मयूरं चित्रबर्हिणम् ।
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ ।।

कुक्कुटं चाग्नि संकाशं प्रददौ वरुणः स्वयम् ।
चन्द्रमाः प्रददौ मेषमादित्यो रूचिरां प्रभाम् ।।

गवां माता च गा देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु ।।

सुधन्वा शकटं चैव रथं चाञ्चितकूबरम् ।
वरुणो वारुणान्दिव्यान्सगजान्प्रददौ शुभान् ।।

सिंहान्सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च दंष्ट्रिणः ।
श्वपदांश्च बहून्घोरान्शस्त्राणि विविधानि च ।।

(भा.अनु.प, १२७ (अ)श्लो २०–२५) ग्रन्थकोशे

श्लोकेषु षणमुखाय देवकृतक्रीडनकवस्तुप्रदानविषय इत्थं वक्ष्यमाणप्रकारेण प्रतिपाद्यते । परन्तु अरुणः कुक्कुटं, चन्द्रो मेषं, सुपर्णो मयूरं, शकट,-रथ - वराह - सिंह - गज, - व्याघ्रादि क्रीडनकवस्तूनि, अन्ये देवाः षणमुखाय प्रायच्छन्निति दातृषु दीयमान वस्तुषु च किञ्चिदिव विपर्यासं कृत्वा कथा भारत एवं प्रतिपादिता दृश्यते ।

षण्मुखाय देवकृतक्रीडन वस्तुप्रदानरूपो मूलकथाभागस्तावत् उभयत्र समान एव । कविसंप्रदायमनुसृत्य द्रविडकविना अत्र दातृदीयमान वस्तुनाम्नि दानक्रमे च भेदः परिकल्पित इतीदं कविसंप्रदाय सिद्धम् ।

## ३. देवसेनापत्ये अभिषेचनम्

देवा जातं कुमारं इन्द्रसेनापत्ये अभ्यषिञ्चन् । सेनापतिर्भूत्वा स कुमारस्तारकासुरमहन् इति तिरुमुरुकाट्रुप्पडै-२६०

வானோர் வணங்குவில் தானைத் தலைவ

ति.मु.पडै-२६० पङ्क्ति

पङ्क्तौ प्रतिपादितविषयस्य महाभारते अनुशासनपर्वणि १३३ अध्याये - (२८.२९)श्लोकौ

सैनापत्येन तं देवाः पूजयित्वा गुहालयम् ।
शशंसुर्विप्रकारं तं तस्मै तारककारितम् ।।

स विवृद्धो महावीर्यो देवसेनापतिः प्रभुः ।
जघानामोघया शक्त्या दानवं तारकं गुहः ।।

भा.अ.प अ १३३ ।।

श्लोकोक्तविषयस्य च विद्यमानमैकमत्यं सुविशदमेव ।

## ४. परमशिवः

शिरसि जटायां गङ्गां, फाले बालचन्द्रं, त्रीणि नेत्राणि, हस्ते शूलं च वहन् परमशिवो वृषभाधिरूढो भूत्वा, उमया समेतो, विषपानेन नीलग्रीवस्सन् पञ्च भूतानि सृजन् विराजत इति एवंविध लक्षणोपेतं पुराणेतिहासादिग्रन्थेषु वर्णितं परमशिवं सङ्ककवयः स्वीयग्रन्थेषु पूर्वोक्तलक्षणोपपन्नत्वेन तथैव वर्णयन्तीत्येतत् क्रमेणाधस्तात् प्रतिपादयिष्यते ।

कलित्तोकै ग्रन्थे ३८ गाथायां-

இமையவில் வாங்கிய ஈர்ஞ்சடையந்தணன்

कलि.गा ३८, प ।

प्रथमपङ्क्तौ । तत्रैव १५० गाथायां—

பிறங்கு நீர் சடைக்கரந்தான்

कलि, गा-१५०, प-९

पङ्क्तौ च परमशिवेन स्वजटायां गङ्गाधारणप्रकारः प्रतिपादितः ।

पुरनानूरु ९१ गाथायां ५—

பால்புரை பிறைநுதற் பொலிந்த சென்னி

पुर-९१ गा, ५ पङ्क्ति

पङ्क्तौ, कलित्तोकै १०३ गाथायां १५-

கொலைவன் சூடிய குழவித் திங்கள் போல்

कलि, गा.१०३, प.१५

कोलैवन् चूडिय कुळवित्तिङ्गळ्पोल्

पङ्क्तौ च परमशिवेन निजफालतलेन बालचन्द्रवहन प्रकारः कथितः ।

परमशिवस्य त्रिनेत्रधारित्वं

पुरनानूरु ६ गाथायां १८-

(முக்கட் செல்வர் நகர்வலஞ் செயற்கே पुर.गा.६, प.१८)

पङ्क्त्या, तथैव कलित्तोकै २ गाथायां ४

முக்கண்ணான் மூவெயிலுமுடன் றக்கால்

कलि गा२, प.४

पङ्क्तत्या च अवगम्यते ।

पुरनानूरु ५६ गाथायां २

மாற்றருங்கணிச்சி மணிமிடற்றோனும்

पुर,गा.५६ २ प

पङ्क्तत्या परमशिवस्य शूलपाणित्वं व्यज्यते ।

परिपाडल् ८ गाथायां २-

புள்மிசைக் கொடியோனும் புங்கவமூர்வோனும்

पङ्क्तौ परमशिवं वृषभाधिरूढं कविर्वर्णयति ।

विषपानेन रुद्रो नीलग्रीवोऽभूदिति

मलैपडुकडां ८३-

காரி உண்டிக் கடவுளது இயற்கையும்

पङ्क्त्या, पुरनानूरु ९१ गाथा ६

நீலமணிமிடற்றொருவன் போல

पङ्क्त्या, परिपाडल् ८ गाथा १२७

மறுமிடற் றண்ணற்கு

पङ्क्त्या च द्रविडकवयो वर्णयन्ति ।

उमासमेतः परमशिवो विराजत इति

तिरुमुरुकाट्रुप्पडै १५३-

உமையமர்ந்து விளங்கும் இமையா முக்கண்

तथा परिपाडल् - ५ गाथा २७, २८

பார்ப்பான் உமையொடு புணர்ந்து காமவதுவையுள்

पङ्क्तिभिश्च वर्ण्यते ।

परमशिवं पञ्चभूतस्रष्टुत्वेन द्रविडकविः

मथुरैक्काञ्चिग्रन्थे ४५३-४५५

நீரு நிலனுந்தீயும் வளியும்

மாகவிசும்போ டைந்துடனியற்றிய

மழுவாணெடியோன்

पङ्क्तिभिः वर्णयति ।

रामायणे बालकाण्डे ४३ सर्गे ७ श्लोके, ''तिरोभावयितुं बुद्धिं चक्रे त्रिनयनस्तदा ।'

उत्तरकाण्डे १६ सर्गे - श्लो ३२

''तोषयस्व महादेवं नीलकण्ठमुमापतिम्''

महाभारते अनुशसानपर्वणि २०७ अध्याये

उमोवाच—

''भगवन् सर्वलोकेश त्रिनेत्रवृषभध्वज'' १८५-१९

''भगवन्सर्वभूतेश शूलपाणे वृषध्वज'' १८५-१

''नमो देवादिदेवाय नमः शशिकलाधर।'' १८५-३५

''नमः सोमाय देवाय नमस्तुभ्यं चतुर्मुख । १८५-३७

नमो भूतपते शंभो जह्नुकन्याम्बुशेखर ।।

महाभारते आदिपर्वणि १८ अ, श्लोः २६

यस्मात् तु नीलता कण्ठे नीलकण्ठस्ततः स्मृतः ।

इत्येभिः पूर्वोक्तरामायण महाभारतादिश्लोकैर्यादृशलक्षणोपपन्नत्वेन परमशिवो वर्णितस्तादृशलक्षणोपपन्नत्वेन परमशिवो वर्णितस्तादृशलक्षणोपपन्नत्वेनैव सङ्घकालीनकवयो परमशिवं वर्णितवन्त इतीदं, अत्रोदाहृत द्रविडगाथापरिशीलनेन स्पष्टं ज्ञातुं शक्यते ।

## ५. महाविष्णुः

एकस्मिन् हस्ते शङ्खं, अपरस्मिन् चक्रं, वक्षसि महालक्ष्मीं च दधानो महाविष्णुः नीलवर्णः, अम्बुजनेत्रः, पीताम्बरधारी, कण्ठे

तुलसीमालां वहन् गरुडपताकोपेतः, श्रवणनक्षत्रे जातः स्वयमेव त्रिमूर्तिरूपस्सन् बलिचक्रवर्तिनो बलं हरन् प्रह्लादानुग्रहार्थं हिरण्य-कशिपुं जघान इति पुराणेतिहासादिषु सर्वत्र, एवं लक्षणोपेतो महाविष्णुः स्तूयमानो दृश्यते । द्रविडकवयोऽपि पूर्वोक्तलक्षणोपेतं महाविष्णुं सङ्घग्रन्थेषु वर्णितवन्त इत्ययमंशः अधस्तात् प्रतिपाद्यमान द्रविडगाथा-परिशीलनेन सुविशदं ज्ञातो भवेत् ।

शङ्खचक्रधारी भूत्वा, वक्षसि लक्ष्मीं च महाविष्णुर्वहतीत्य-यमंशः, मुल्लैप्पाट्टु ग्रन्थे १-३

நனந் தலையுலகம் வளை இ நேமியொடு
வலம் புரி பொறித்த மாதாங்கு தடக்கை
நீர் செல நிமிர்ந்த மா அல் போல

पङ्क्तिषु, पेरुम्पाणाट्रुप्पडै ग्रन्थे २९-३०

திருமறுமார்பின்,

முந்நீர் வண்ணன் பிறங்கடை அந்நீர்

कलित्तोकै ग्रन्थे १०५ गाथायां ९

வள்ளுருள் நேமியான் வாய்வைத்த வளை போல

पङ्क्तौ, कलित्तोकै ग्रन्थे १४५ गाथायां ६४

மாயவன் மார்பில் திருப்போல்

पङ्क्तौ च निरूपितः ।

पुरनानूरु १७४ गाथायां ६

அஞ்சனவுருவன் றந்து நிறுத்தாங்கு

पङ्क्तौ, पेरुम्पाणाट्रुप्पडै ३०-

முன்னீர் வண்ணன் பிறங்கடை அந்நீர்த்

(मुन्नीर् वण्णन् पिरङ्कडै अन्नीर्त्)

पङ्क्तौ च भगवतो विष्णोर्नीलवर्णोपेतत्वं निरूप्यते ।

स च पद्मपत्राक्ष इति परिपाडल् १५ गाथायां ४९-

தாமரை புரையுங் கண்ணன்

(तामरै पुरैयुङ्कण्णन्)

पङ्क्तौ, स एव पीताम्बरधारीत्येतत् परिपाडल् ग्रन्थे ।
१३ गाथायां १-२

மணிவரையூர்ந்த மங்குல் ஞாயிற்
றணி வனப்பமைந்த பூந்துகில், புனைமுடி

(मणिवरैयून्र्द मङ्गुन्ज्ञायिट्रणि
वनप्पमैन्त पून्तुकिल पुनैमुडि)

पङ्क्तौ च क्रमेण द्रष्टुं शक्यम् ।

वक्षसि तुलसीमालां वहतीत्येतत्
परिपाडल् ग्रन्थे ८ गाथायां -१

மண்மிசையவிழ் துழாய் மலர்தரு செல்வத்து

प्रथमपङ्क्तौ प्रतिपाद्यते ।

पुरनानूरु ५६ गाथायां ६

விண்ணுயர் புட்கொடி விறல்வெய் யோனும்

(विण्णुयर् पुट्कोडि विरल्वेय्योनुम्)

पङ्क्तौ, परिपाडल् १३ गाथायां ४

புள்ளுப்பொறி புனைகொடி

(पुल्लोप्पोरि पुनैकोडि)

पङ्क्तौ, परिपाडल् ८ गाथायां २

புள்மிசை கொடியோனும்

(पुण्मिशै कोडियोनुं)

पङ्क्तौ, परिपाडल् २ गाथायां ६०

செவ்வாய் உவணத் துயர்கொடி யோயே

(शेव्वाय् उवणत्तुयर्कोडियोये)

पङ्क्तौ च विष्णोः गरुडध्वजोपेतत्वं सुस्पष्टम्

श्रवणनक्षत्रे स जात इति मदुरैक्काञ्ची ५९१

மாயோன் மேய ஓண நன்னாட்

पङ्क्तौ,

त्रिमूर्तिरूपःस एव प्रकाशत इत्येतत्

परिपाडल् १३ गाथायां ३७

மூவுருவாகிய தலைபிரி யொருவனை

(मूवुरुवाकिय तलैपिरियोरुवनै)

पङ्क्तौ च यथाक्रमं विशदीक्रियते ।

प्रह्लादानुग्रहार्थं तत्पितुः हिरण्यकशिपोः हननप्रकारः परिपाडल् ग्रन्थे ४ गाथायां १२,१६,२०,२६

பிருங்கலாதன் பலபல பிணிபட
நன்றா நட்ட அவன் நன் மார்பு முயங்கி
வெடிபடாவொடி தூண் தடியொடு
நின் தண்மையுஞ் சாயலுந் திங்களுள

पङ्क्तिषु प्रदर्शितः । पूर्वोक्त सङ्गकालीन द्रविडग्रन्थवर्णित महाविष्णुलक्षणस्य, पुराणेतिहासादि प्रतिपादितमहाविष्णु-लक्षणस्य च दृश्यमानमेकरूपत्वमुभयग्रन्थपठितृणां सुज्ञातं भवेत् ।

अनेन सङ्गकाले सर्वेऽपि जनाः कवयोऽपि भगवद्भक्तिपराः, भक्तिमार्गप्रचारैकपरायणाः, तद्वर्णनोत्सुकाश्चासन्निति पूर्वोदाहृत-सङ्गग्रन्थगाथाभिर्निर्णेतुं पारयामः ।

स एव सम्प्रति षण्मुखनाम्नाभिधीयत इति षण्मुखोतत्तिकथा परिपाडल् ग्रन्थे ५ गाथायां २६-५० पङ्क्तिषु एवं विस्तरेण प्रत्यपादि-

அமரர் வேள்விப்
பாகமுண்ட பைங்கண் பார்ப்பான்
உமையொடு புணர்ந்த காமவதுவையுள்
அமையாப் புணர்ச்சி அமைய நெற்றி

இமையா நாட்டத் தொருவரங் கொண்டு
விலங்கென விண்ணோர் வேள்வி முதல்வன்
விரிகதிர் மணிப்பூண் அவற்குத்தான் ஈத்த
தரிதென மாற்றான் வாய்மையனாதலின்
எரி கனன் றானாக் குடாரிகொண்டவனுருவு
திரித்திட்டோனிவ் வுலகேழு மருளக்
கருப்பெற்றுக் கொண்டோர் கழிந்தசேய் யாக்கை
நொசிப்பி னேழுறு முனிவர் நனியுணர்ந்து
வசித்ததைக் கண்ட மாக மாதவர்
மனைவியர் நிறைவயின் வசி தடி சமைப்பிற்
சாலார் தானே தரிக்கென அவரவி
யுடன் பெய் தோரே யழல்வேட்டவ்வவித்
தடவு நிமிர் முத்தீப் பேணிய மன்னெச்சில்

வடவயின் விளங்கா லுறையெழுமகளிருள்
கடவுள் ஒரு மீன் சாலினியொழிய
அறுவர் மற்றையோரு மன்னிலை அயின்றனர்
மறுவறுகற்பின் மாதவர் மனைவியர்
நிறைவயின் வழாஅது நிற்சூ லினரே
நிவந்தோங் கிமயத்து நீலப்பைஞ்சுனைப்
பயந்தோரென்ப பதுமத்துப்பாயல்
பெரும் பெயர் முருக.......

वाल्मीकिरामायणे बालकाण्डे ३६, ३७ सर्गाभ्यां सङ्ग्रहेण प्रतिपादित षण्मुखोत्पत्तिकथाया द्रविडग्रन्थोक्तकथायाश्च विद्यमानमैकमत्यं द्रष्टॄणां सुविदितमेव । महाभारते अनुशासनपर्वणि १३०-१३३ अध्यायेषु प्रतिपादिता षण्मुखोत्पत्तिकथा, परिपाडल् नामक द्रविडग्रन्थोक्तषण्मुखोत्पत्ति कथातः किञ्चिदिव भिन्ना दृश्यते ।

## ६. षण्मुखदर्शनम्

त्रिमूर्तयो ब्रह्मविष्णुशिवास्त्रयस्त्रिंशत् देवाः, अष्ट दिक्पालकाः, अन्ये च देवगणा मिलिता भूत्वा जातं कुमारं द्रष्टुमागता इति भारते अनुशासनपर्वणि १३३ अध्याये–

ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः ।
रुद्रो धाता च विष्णुश्च यमः पूषार्यमाभगः ।।

अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ ।
आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ।।

पृथग्भूतानि चान्यानि यानि देवगणानि वै ।
आजग्मुस्तेऽद्भुतं द्रष्टुं कुमारं ज्वलनात्मजम् ।।

(भा.अनु.प.१३३ अ, श्लो १५,१६,१७)

श्लोकैः प्रतिपादितमस्ति ।

अयमेवांशः परिपाडल्ग्रन्थेः-

மண்மிசை யவிழ்துழாய் மலர்தரு செல்வத்துப்
புள்மிசைக் கொடியோனும் புங்கவ மூர்வோனும்
மலர்மிசை முதல்வனு மற்றவ னிடைத் தோன்றி
உலகிருளகற்றிய பதின்மரு மிருவரும்
மருந்துரை யிருவருந் திருந்துநூ லெண்மரும்
ஆதிரை முதல்வனிற் கிளந்த
நாதர் பன்னொருவரு நன்றிசை காப்போரும்
யாவரும் பிறரு மமரரு மவுணரும்
மேவரு முதுமொழி விழுத்தவ முதல்வரும்
பற்றாகின்றுநின் காரணமாகப்

(परि.गा.८, पङ्क्ति १-१०)

# VII
# संघग्रन्धेषु वैदिककलाचारः

### *1.அந்தணர் அதிகாலையில் வேதம் ஓதுதல்:*

*மதுரைக் காஞ்சி :* (வரி 656-657)

ஓதல் அந்தணர் வேதம் பாட, சீர் இனிது கொண்டு நரம்புஇனிது இயக்கி

### *2. அந்தணர் அந்தியில் செய்யும் கடன்: (24)*

சிறுதலை நவ்விப் பெருங்கண் செய்யும் கடன் மாப்பிணை,

அந்தி அந்தணர் அருங்கடன் இறுக்கும்.

*புறநானூறு பாட்டு 2;வரி 22,*

### *3. அந்தணர் அறுதொழில் புரிதல்:*

(பத்துப்பாட்டு பாடல்24; வரி 6,8)

### *4. அந்தணர் இல்லத்தில் கோழியும் நாயும் வளர்க்காமை:*

*பொருநறாற்றுப்படை வரி 299,301:*

பைஞ்சேறு மெழுகிய படிவ நல்நகர் மனை உறை கோழியோடு ஞமலிதுன்னாது வளைவாய்க் கிள்ளை மறை விளி பயிற்றும் மறைகாப்பாளர் உறைபதிச்சேப்பின்

### *5. அந்தணர் தீயை வழிபடுதல்*

*(கலித்தொகை -119-வரி 12, 13: புறநானூறு- 397-வரி 20,21: )*

அந்தி அந்தணர் எதிர்கொள அயர்ந்து செந்தீச்செவ் அழல் தொடங்க வந்ததை அறுதொழில் அந்தணர் அறம் புரிந்து எடுத்த தீயொடு விளங்கும் நாடன், வாய்வாள் வலம்படு தீவின் பொலம் பூண்வளவன்

***6. அந்தணர் பூணூல் அணிதல் -***
***திருமுருகாற்றுப்படை வரி 183, 184 :***

ஒன்பது கொண்ட மூன்று புரி நுண் ஞாண் புலராக் கழகம்புலர உடீஇ

***7. அந்தணர் வாழ்க்கை முறை***
***திருமுருகாற்றுப்படை 177,182:***

இரு மூன்று எய்திய இயல்பினின் வழா அது, இருவர் சுட்டிய பல்வேறு தொல்குடி.... இரு பிறப்பாளர், பொழுது அறிந்து நுவல

***8. அந்தணர் முருகனை வழிபடும் முறை:***
***திருமுருகாற்றுப் படை வரி 183, 187:***

ஒன்பது கொண்ட புரிநுண் ஞாண் புலராக்கழகம் புலர உடீஇ உச்சிக் கூப்பிய கையினர், தற்புகழ்ந்து ஆறு எழுத்து அடக்கிய அருமறைக் கேள்வி நா இயல் மருங்கில் நவிலப் பாடி விரை உறு நறுமலர் ஏந்தி- பெரிது உவந்து ஏரகத்து உறைதலும் உரியன்.

***9. அந்தி காலத்துக் கடை - மதுரைக் காஞ்சி:544:***

அல் அங்காடி அழிதரு கம்பலை

***10. அறங்கூறும் அவயத்தார் இயல்பு -***
***மதுரைக் காஞ்சி-489, 492 :***

அச்சமும் அவலமும் ஆர்வமும் நீக்கி செற்றமும் உவகையும் செய்யாது காத்து ஞெமன் கோல் அன்ன செமைத்து ஆகி சிறந்த கொள்கை அறம் கூறு அவையமும்

***11. ஆடவர் மணல் ஏறுதல் -***
***கலித்தொகை பாடல் 56, வரி 22, 23 :***

நிற் கண்டார்க்கு அணங்காகும் என்பதை அறிதியோ? அறியாயோ? முதிர்கோங்கின் முகை என, முகம் செய்த குரும்பை என, பெயல் துளி முகிழ் என, பெருத்த நின் இளமுலை மயிர் வார்ந்த வரி முன் கை மடநல்லாய்

***12. இறந்த கணவனுக்கு காதலி பிண்டம் வைத்தல்:***
***புறநானூறு பாடல் 234, வரி 1,4***

நோகோ யானே? தேய்க மா காலை! பிடி அடி அன்ன சிறு வழி மெழுகி தன் அமர் காதலி புல் மேல் வைத்த இன் சிறு பிண்டம் யாங்கு உண்டனன் கொல்-

உலகு புகத் திறந்த வாயில் பலரோடு உண்டல் மரீ இயோனே?

***13. கணவனை இழந்த உரிமை மகளிர் வளை அணியாமை - புறநானூறு பாடல் 238, வரி 6-9***

தொடி கழி மகளிரின் தொல்கவின் வாடி, பாடு நர் கடும்பும் பையென்றனவே தோடு கொள் முரசும் கிழந்தன.

***புறநானூறு பாடல் 238, வரி 5,6:*** வளை இல், வறுங்கை ஓச்சி, கிளையுள் ஒய்வலோ?

***14.கணவனை இழந்த மகளிர் அணிகலன்களை ஒழித்தல் - புறநானூறு பாடல் 224 வரி 11- 17***

***இறந்தோன் தானே! அளித்து இவ்வுலகம் !*** அருவி மாறி, அஞ்சு வரக் கருகி, பெருவறங்கூர்ந்த வேனிற் காலை, பசித்த ஆயத்துப்பயன் நிரை தருமார், பூவாட்கோவலர் பூவுடன் உதிரக் கொய்து கட்டு அழித்தவேங்கையின் மெல் இயல் மகளிரும் இழை களைந்தனரே.

*புறநானூறு பாடல் 280 வரி 14*

மண்ணுறு மழித்தலைத் தெண் நீர்வார, தொன்றுதாம் உடுத்த அம்பகைத் தெரியற் சிறுவென் ஆம்பல் அல்லி வெள் உண்ணும் கழி கல மகளிர் போல, வழி நினைந்திருத்தல் அதனினும் அரிதே!

### *15. கணவனை இழந்த மகளிர் கூந்தலை நீக்குதல்:*

*புறநானூறு பாடல் 25 வரி 12-14*

ஒள் நுதல் மகளிர் கைம்மை கூர, அவிர் அறல்கடுக்கும் அம் மென் குவை இருங்கூந்தல் கொய்தல் கண்டே.

*பாடல் 250 வரி 1-6:* இரவலர்த் தடுத்த வாயில், புரவலர் கண்ணீர்த்,,.தடுத்த தண்நறும்பந்தர் கூந்தல் கொய்து, குறுந்தொடி நீக்கி அல்லி உணவின் மனைவியொடு, இனியே புல் லென்றனையால் வளம்கெழு திருநகர்!

*பாடல் 280: வரி11:* மண்ணுறு மழித்தலைத்தெண் நீர் வார,

### *16. கணவனை இழந்த மகளிர் பிண்டம் கொடுத்தல்*

*புறநானூறு பாடல் 249 வரி 10-14*

மன்னே ! இன்றே அடங்கிய கற்பின், ஆய் நுதல் மடந்தை உயர் நிலை உலகம் அவன்புக... வரி நீறு ஆடு சுளகின் சீறிடம் நீக்கி அழுதல் ஆனாக் கண்ணள் மெழுகும், ஆப்பி கண் கலுழ் நீரானே.

### *17. கணவனை இழந்த மகளிர் கூந்தலையும் வளையையும் - நீக்குதல் புறநானூறு பாடல் 250 வரி 2-4*

புரவலர் கண்ணீர்த்தடுத்த தண் நறும்பந்தர், கூந்தல் கொய்து, குறுந்தொடி நீக்கி

**_18. கணவனை இழந்த மகளிர் நெய் பூசி கூந்தலை ஒப்பனை செய்யாமை - புறநானூறு பாடல் 147, வரி 4-7_**

நெருநல் ஒரு சிறைப் புலம்பு கொண்டு உறையும் அரி மதர் மழைக்கண், அம் மா அரிவை நெய்யொடு துறந்த மை இருங்கூந்தல் மண்ணுறு மணியின் மாசு அற மண்ணி,

**_19. காக்கை கரைந்தால் விருந்துவரும்:_**
**_குறுந்தொகை- 26-வரி-6_**

பெருந்தோள் நெகிழ்த்த செல்லற்கு விருந்து வரக் கரைந்த காக்கையது பலியே.

**_20. கிரஹண காலத்தில் சான்றோர் செயல்:_**
**_கலித்தொகை -140-வரி 17,18_**

திங்கள் அரவு உறின், தீர்க்கலார் ஆயினும் தம் காதல் காட்டுவர், சான்றவர்

**_21. குடுமிகளைதல்: புறநானூறு பாடல் 17-வரி 2_**

குணா குட கடலா எல்லை

**_22. குடுமி வைத்தல்: அகநானூறு பாடல் 176- வரி 19_**

புல் உளைக் குடுமிப்புதல்வற் பயந்து

**_புறநானூறு பாடல் 250-வரி 8-9_**

முனித்தலைப் புதல்வர் தந்தை தனித்தலைப் பெருங்காடு முன்னிய பின்னே

**_புறநானூறு பாடல் 310-வரி 7,8_**

மான் உளை அன்ன குடுமித் தோல் மிசைக் கிடந்த புல் அணலோனே.

### 23. ஸ்வர்க்கம் புகவேள்வி செய்தல்:
**பதிற்றுப்பத்து பாடல் 3**

வாழி ஆதன் வாவி அவினி பால்பல ஊறுக பகடு பல சிறக்க, என வேட்டோனே.

### *24. தீயர் செய்தால் நரகம் புகுவர்:*
***குறுந்தொகை 292-வரி 4-6***

பொன்செய் பாவை கொடுப்பவும் கொள்ளான் பெண் கொலை புரிந்த நன்னன் போல, வரையா நிரையத்துச் செலீ இயரோ !

### *25. தெய்வத்தைத் தொட்டு சபதம் கூறல்:*
***கலித்தொகை 108-வரி 55,56***

மலையொடு மார்பு அமைந்த செல்வன் அடியைத் தலையினால் தொட்டு உற்றேன், சூள்

### *26. தெய்வத்தை வேண்டி குழந்தை பெறுதல்:*
***ஐங்குறு நூறு 257-வரி 1,2***

குன்றக்குறவன் கடவுட் பேணி இரந்தனன் பெற்ற எல் வளைக் குறுமகள்

### *27. தெய்வவழி பாட்டு முறை: வரி 42,44*

அவ் இதழ் அவிழ்பதம் கமழ பொழுது அறிந்து இரும்பு செய் விளக்கின் ஈர்ந்திரிக் கொளீஇ

நெடுநல்வாடை நெல்லும் மலரும் தூஉய், கைதொழுது மல்லல் ஆவணம் மாலை அயர

### *28. பட்டனத்தில் பல மொழி பேசுவோர்:*
***பட்டினப்பாலை 217, 218***

மொழி பல பெருகிய பழிதீர் தேஎத்துப் புலம் பெயர் மாக்கள் கலந்து, இனிது உறையும் முட்டாச் சிறப்பின், பட்டினம் பெறினும்

### *29. பரத்தையர் செய்கையை இழத்தல்:*
***பரிபாடல் வரி 48-62***

ஆயத்து ஒருத்தி, அவளை ‘அமர் காமம் மாயப் பொய் கூட்டி மயக்கும் விலைக் கணிகை. பெண்மைப் பொதுமைப் பிணியிலி ! ஐம் புலத்தைத் துற்றுவ துற்றும் துணை இதழ் வாய்த் தொட்டி ! முற்றா நறு நறா மொய் புனல் அட்டி, காரிகை நீர் ஏர் வயல், காமக்களி நாஞ்சில், மூரி தவிர முடுக்கு முது சாடி!

மட மதர் உண்கண் கயிறாக வைத்துற் தடமென் தோள் தொட்டு, தகைத்து மடவிரலால் இட்டார்க்கு யாழ் ஆர்த்தும் பாணியில், எம் இழையைத் தொட்டு ஆர்த்தும் இன்பத் துறைப் பொதுவி கெட்டதைப் பொய்தல் மகளிர் கண்காண இகுத்தந்து இவ்வையைத் தொழுவத்துத் தந்து வடித்தி, இடித்து மத்திகை மாலையாமோதி அவையத்துத் தொடர்ந்தோம்.

### *30. பார்ப்பனர் சிறுவர் குடுமி வைத்திருத்தல்:*
***ஐங்குறுநூறு 202- வரி 2,3***

அன்னை ! நம் ஊர்ப் பார்ப்பனக்குறுமகப் போலத் தாமும் குடுமித் தலைய மன்ற -நெடுமலை நாடன் ஊர்ந்த மாவே.

### *31. பார்ப்பனருக்கு தானம் கொடுத்தல்:*
***புறநானூறு 367 - வரி 4,5***

ஏற்ற பார்ப்பார்க்கு ஈர்ங்கை நிறையப் பூவும் பொன்னும் புனல் படச் சொரிந்து

### *32. பார்ப்பனருக்கு பசுவும், நிலமும் தானம் செய்தல்: - பதிற்றுப்பத்து - 6-4,5*

***33. பார்ப்பார் மனம் நோகும்படி அரசர் செய்யாமை:***
***புறநானூறு 43-வரி 13-14***

ஆர்புனை தெரியல் நின் முன்னோர் எல்லாம் பார்ப்பார் நோவன செய்யலர்.

***34. பார்ப்பார் தூது செல்லுதல்: அகநானூறு 337-வரி 7,8***

தூது ஒய் பார்ப்பாண் மடிவெள் ஓலைப் படையுடைக் கையர் வரு தொடர் நோக்கி

***புறநானூறு 305 -வரி 1-4***

வயலைக் கொடியின் வாடிய மருங்குல், உயவல் ஊர்தி பயலைப் பார்ப்பான் எல்லி வந்து நில்லாது புக்கு, சொல்லிய சொல்லோ சிலவே.

***35. புரோகிதரை ஆதரித்தல்- பதிற்றுப்பத்து-7-10.***

***36. மகளிர் கணவனைத் தொழுது எழுதல்:***
***கலித்தொகை -39 வரி 15, 16, 17.***

இருஞ்சிலம்பின் வாங்கு அமை மென் தோட்குறவர் மட மகளிர் தாம் பிழையார், கேள்வர்த் தொழுது எழலால், தம் ஐயரும் தாம் பிழையார் தாம் தொடுத்த கோல்.

***37. மகளிர் மங்கள் சூத்ரம் அணிதல்:***
***புறநானூறு-127; வரி 4- 6***

கான மஞ்ஞை கணனொடு சேப்ப, ஈகை அரிய இழை அணி மகளிரொடு சாயின்று என்ப, ஆஅய் கோயில்

***38. மங்கையர் கணவனை வணங்குதல்:***
***பரிபாடல்-20 வரி 88, 89***

தகவுடை மங்கையர் சான்றாண்மை சான்றார் இகழினும், கேள்வரை ஏத்தி இறைஞ்சுவார்.

**39. கேசம் குறைத்தல்: பொருநற் ஆற்றுப்படை வரி 29**

மயிர் குறை கருவி மாண்கடை அன்ன
பூங்குழை ஊசற் பொறை சால் காதின்

**40. மழை பெய்விக்கும் கற்பின் ஆற்றல்:**
**கலித்தொகை 16-வரி 19-20**

தெய்வத்துத் திறன் நோக்கி; தெருமாரல் தேமொழி!

வறன் ஓடின் வையகத்து வான் தரும் கற்பினாள்

**41. முக்கோல் அந்தணர் அறிவுரை கூறுதல்:**
**கலித்தொகை 126 - வரி 4,5**

முக்கோல் கொள் அந்தணர் முதுமொழி நினைவார் போல், எக்கர் மேல் இறை கொள்ளும், இலங்கு நீர்த் தண் சேர்ப்ப

**42. முதுமையில் தவம் செய்தல்: புறநானூறு 251-வரி4-7**

காழைக்கண்நெடுவரை அருவி ஆடி, கான யானை தந்த விறகின் கடுந் தெறல் செந் தீ வேட்டு, புறம் தாழ் புரி சடை புலர்த்துவோனே.

*புறநானூறு 252-வரி 1-5*

கறங்கு வெள் அருவி ஏற்றலின், நிறம் பெயர்ந்து, தில்லை அன்ன புல்லென் சடையோடு அள் இலைத் தாளி கொய்யுமோனே! இல் வழங்கு மட மயில் பிணிக்கும் சொல் வலை வேட்டுவன் ஆயினன் முன்னே.

**43. முனிவருக்குத் தலை தாழ்ந்து வணங்குதல்:**
**புறநானூறு 6-வரி 19, 20**

இறைஞ்சுக, பெரும! நின் சென்னி சிறந்த நான்மறை முனிவர் ஏந்து கை எதிரே.

**44. முனிவர் வேண்டுதலை செய்தல்:**

***பட்டினப்பாலை.வரி 54,55***

அவிர் சடை முனிவர் அங்கி வேட்கும் ஆவுதி நறும் புகை முனைஇ

**45. வடக்கிருத்தல் (உபவாசம்)**

***புறநானூறு-65-வரி 10-12***

புறப்புண் நாணி, மறத்தகை மன்னன் வாள் வடக்கிருந்தனன்; ஈங்கு நாள் போல் கழியல, ஞாயிற்றுப் பகலே.

***புறநானூறு-66-வரி 6-9***

கலிகொள்யாணர் வெண்ணிப்பறந்தலை மிகப் புகழ் உலகம் எய்தி புறப்புண் நாணி, வடக்கிருந்தோனே,

**46. வானில் நக்ஷத்ரங்களின் கதியால் பலன் அறிதல்**

***புறநானூறு 229,-வரி 1,12***

ஆடு இயல் அழல் குட்டத்து ஆர் இருள் அரை இரவில், முடப் பனையத்து வேர் முதலாக் கடைக் குளத்துக் கயம் காய, பங்குனி உயர் அழுவத்து, தலை நாள் மீன் நிலை திரிய, நிலை நாள் மீன்அதன் எதிர் ஏர்தர, தொல் நாள் மீன் துறை படிய, பாசிச் செல்லாது, ஊசித் துன்னாது அளக்கர்த் திணை விளக்காகக் கனை எரி பரப்பப், கால் எதிர்பு பொங்கி, ஒரு மீன் வீழ்ந்தன்றால் விசும்பினானே.

**47. வேள்வியால் சொர்க்கம் புகுதல்-**

***மதுரைக் காஞ்சி வரி 494, 495***

ஆவுதி மண்ணி, அவிர் துகில் முடித்து, மா விசும்பு வழங்கும் பெரியோர் போல.

*****